॥ धर्माम्बिकास्तवः ॥

त्यागराजविरचितः

कल्याणामृतकामधेनुमहिले कामप्रियाहर्षदे
कारुण्यामृतवापिके पिकशिशुस्वानन्दसल्लापिनि ।
कामेशप्रियकामकल्पलतिके कादम्बवाटीप्रिये
देहि श्रीपदपद्मभक्तिमनिशं धर्माम्बिके श्रीशिवे ॥ १ ॥

एणीबालविलोचने फणिमणिश्रेणीलसत्कङ्कणे
तूणीराकृतजङ्घिके त्रिनयने स्थाणोर्मनोहारिणि ।
वाणीपाणिसरोजवादितलसद्वीणास्वरालापिके
देहि श्रीपदपद्मभक्तिमनिशं धर्माम्बिके श्रीशिवे ॥ २ ॥

ईशित्वादिविभूतिकस्वविभवे ईकारसिंहासने
इन्द्राणीपठितस्तुते इहपरत्राणध्वजे इन्दिरे ।
ईशानादिसुरेन्द्रसेवकजने ईशाधिराजेश्वरी
देहि श्रीपदपद्मभक्तिमनिशं धर्माम्बिके श्रीशिवे ॥ ३ ॥

लावण्याब्धिपयोजवक्त्रनयने लक्ष्मीकरालोकने
लक्ष्मीकान्तनिषेविताङ्घ्रिकमले लम्बोदरश्रीकरि ।
लक्ष्यालक्ष्यविलक्षणे क्षणवतां स्वानन्दवृद्धिप्रदे
देहि श्रीपदपद्मभक्तिमनिशं धर्माम्बिके श्रीशिवे ॥ ४ ॥

ह्रीपाशादिविमोचनेऽतिचतुरे हृद्ग्रन्थिविच्छेदिके
हृद्यानन्दसुधारसार्द्रमधुना संतर्पणाह्लादिनि ।
ह्रींकारार्थजगद्विलासविभवे विद्ये विमर्शात्मिके
देहि श्रीपदपद्मभक्तिमनिशं धर्माम्बिके श्रीशिवे ॥ ५ ॥

हस्तिश्रेष्ठसुकुम्भसंनिभकुचे  हर्यक्षमध्ये शुभे
हेमाब्जाननपाणिपादनयने चन्द्रार्धफाले शिवे ।
हे माराारिमतेर्विमोहदलसन्नीलालके निर्मले
देहि श्रीपदपद्मभक्तिमनिशं धर्माम्बिके श्रीशिवे ॥ ६ ॥

सत्यानन्दचिदीश्वरप्रणयिनी सौभाग्यरत्नाकरी
साम्राज्यप्रभुदेशिकेन्द्रकरुणास्यन्दामृतस्वर्धुनी ।
सर्वाशारहितस्य भक्तहृदयस्यानन्दकादम्बिनी
देहि श्रीपदपद्मभक्तिमनिशं धर्माम्बिके श्रीशिवे ॥ ७ ॥

कल्पे कालकलेशि कल्पकलने संकल्पसिद्धाखिले
कालाकालविभागकल्पनकले कालान्तकप्रेयसि ।
कालोपाधिविवर्जिते कलिमलप्रध्वंसिनी कामदे
देहि श्रीपदपद्मभक्तिमनिशं धर्माम्बिके श्रीशिवे ॥ ८ ॥

हक्षद्वन्द्वदलत्रिकोणविलसज्ज्योत्स्नाकलाराधिते
हंसद्वन्द्वगतिप्रबोधजननश्रीदेशिकेन्द्रात्मिके ।
हंसारोहविचक्षणे अभयदे आनन्दसंवर्धिनी
देहि श्रीपदपद्मभक्तिमनिशं धर्माम्बिके श्रीशिवे ॥ ९ ॥

लज्जानम्रमुखे प्रनृत्यति शिवे लास्यप्रिये लक्षणे
लक्ष्यार्थे लयवर्जिते ललितवाक्पीयूषसंदोहिनि ।
लक्ष्मीमानसराजहंसि ललिते लामज्जगन्धप्रिये
देहि श्रीपदपद्मभक्तिमनिशं धर्माम्बिके श्रीशिवे ॥ १० ॥

ह्रींकारे हृदयत्रिकोणनिलये हृद्ये सुराराधिते
ह्रींकारध्वनिलीनचित्तसुलभे हृष्टेश्वरेष्टेश्वरि ।
ह्रींकाराग्निमुखप्रशान्तकलनासर्वज्ञसाम्राज्यदे
देहि श्रीपदपद्मभक्तिमनिशं धर्माम्बिके श्रीशिवे ॥ ११ ॥

सत्यासत्यविवर्जिते समरसे संविल्लते शाश्वते
सर्वज्ञानविबोधिनीशकरुणे सौभाग्यविद्यामयि ।
सच्चित्सौख्यविलासकेलिकुतुके सर्वापवर्गात्मिके
देहि श्रीपदपद्मभक्तिमनिशं धर्माम्बिके श्रीशिवे ॥ १२ ॥

कर्माकर्मविवर्जिते कविमुखे वाग्वृष्टिकादम्बिनी
काव्यालापविबोधिनीशकलिके कौमारि कात्यायनि ।
कान्तार्धेन्दुविभूषणे स्मरकले श्रीकामकोटीश्वरी
देहि श्रीपदपद्मभक्तिमनिशं धर्माम्बिके श्रीशिवे ॥ १३ ॥

लब्धश्रीकमलालयालयलसत्कामेश्वरप्रेयसी
लाक्षारक्तरसप्रलिप्तचरणद्वन्द्वे लघुश्यामले ।
लौहित्यच्छविपाटलीसुमपदे पर्याप्तकामप्रदे
देहि श्रीपदपद्मभक्तिमनिशं धर्माम्बिके श्रीशिवे ॥ १४ ॥

ह्रींकारोत्थितनादसंततिसुधाधाराभिसंतर्पिते
ह्रींकारत्रयमन्त्रविद्रुमलताज्योतिःस्वरूपे परे ।
ह्रींकाराक्षररूपिणि त्रिभुवनश्रीराजराजेश्वरी

देहि श्रीपदपद्मभक्तिमनिशं धर्माम्बिके श्रीशिवे ॥ १५ ॥

मूलालवालजपराविटपिप्रसूनै-
रभ्यर्चिता श्रुतिरहस्यसुगन्धगन्धैः ।
प्रस्पन्दिधीपवनचालितवाङ्मयैस्त्वं
त्यागाधिराजमहिषी वरदे प्रसीद ॥ १६ ॥

इत्यानन्दनाथपादपपद्मोपजीविना काश्यपगोत्रोत्पन्नेनान्ध्रेण त्यागराजनाम्ना विरचितः धर्माम्बिकास्तवः संपूर्णः